दयस्थो जनार्दनः ॥ ४५ ॥ गौतम उवाच ॥ गोको
टिदानं ग्रहणेषु काशीप्रयागगंगाऽयुतकल्पवासः ॥
यज्ञायुतं मेरुसुवर्णदानं गोविंदनाम्ना न कदापि तु
ल्यम् ॥ ४६ ॥ अत्रिरुवाच ॥ गोविंदेति सदा स्ना
नं गोविंदेति सदा जपः ॥ गोविंदेति सदा ध्यानं
सदा गोविंदकीर्तनम्॥४७॥अक्षरं हि परं ब्रह्मगोविंदे
त्यक्षरत्रयम् ॥ तस्मादुच्चरितं येन ब्रह्मभूयाय
कल्पते ॥ ४८ ॥ श्रीशुक उवाच॥अच्युतःकल्पवृ
क्षोऽसावनंतः कामधेनवः ॥ चिंतामणिश्च गोविंदो
हरिनाम विचिंतयेत् ॥ ४९ ॥ हरिरुवाच ॥ जयति
जयतिदेवो देवकीनंदनोऽयं जयति जयति कृष्णो
वृष्णिवंशप्रदीपः ॥ जयति जयति मेघश्यामलःको
मलांगो जयति जयति पृथ्वीभारनाशो मुकुंदः ॥
॥ ५० ॥ पिप्पलायन उवाच ॥ श्रीमन्नृसिंहविभवे
गरुडध्वजाय तापत्रयोपशमनाय भवौषधाय ॥
कृष्णाय वृश्चिकजलाग्निभुजंगरोगक्लेशव्ययायहरये